तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्या स स्त्रीणाꣳ सुकृतं वृङ्क्ते-ऽथ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृञ्जते ॥३॥ एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया वि सुकृतोऽस्मा-ल्लोकात्प्रयन्ति यऽइदमविद्वाꣳसोऽधोपहासं चरन्तीति ॥ ४ ॥ बहु वाऽइदꣳ सुप्तस्य वा जाग्रतो वा रेत स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पु-नस्तेज पुनर्भगः पुनरग्नयो धिष्ण्या यथा स्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्या-मादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥ अथ यद्युदकऽआत्मानं पश्येत् । तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति ॥ ६ ॥ श्रीर्ह वाऽएषा स्त्रीणाम् । यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्यो-पमन्त्रयेत सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममे-नां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आददऽइत्य-यशा एव भवति ॥ ७ ॥ स यामिच्छेत् । कामयेत मेति तस्यामर्थं निष्ठाप्य मुखे-न मुखꣳ संधायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधि जायसे स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेति॥८॥अथ यामिच्छेत् । न गर्भं दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखꣳ संधायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आद-दऽइत्यरेता एव भवति ॥९॥ शतम् ७७००॥ अथ यामिच्छेत् । गर्भं दधीतेति तस्या-मर्थं निष्ठाप्य मुखेन मुखꣳ संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आद-धामीति गर्भिण्येव भवति॥१०॥ अथ यस्य जायायै जारः स्यात् । तं चेद्द्विष्यादामपात्रे-ऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिः स्तीर्त्वा तस्मिन्नेतास्तिस्रः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीराशापराकाशौ तऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः पुत्रपशूꣳस्तऽआददेऽसाविति नाम गृह्णाति मम समिद्धे-ऽहौषीः प्राणापानौ तऽआददेऽसाविति नाम गृह्णाति स वाऽएष, निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य जायाया उपहासं नेच्छेदुत ह्येवंवित्परो भवति ॥ ११ ॥ अथ यस्य जायामार्तवं विन्देत् । त्र्यहं कꣳसे न पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्तऽआप्लुत्य व्रीहीनवघातयेत् ॥ १२ ॥ स य इच्छेत् । पुत्रो मे गौरो जायेत वेदमनुब्रुवीत सर्व-

द्रासितो वार्षगणो हरितात्कश्यपाच्छरित कश्यपः शिल्पात्कश्यपान्निध्रुवेः शिल्पः कश्यप कश्यपान्नैध्रुवेः कश्यपोनैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३३ ॥ ब्राह्मणम् ॥ ८ [ ९४ ] ॥ सप्तम प्रपाठक ॥ कण्डिकासंख्या १०१ ॥ नवमोऽध्याय [१०१

अस्मिन्काण्डे कण्डिकासंख्या ७९६ ॥

इति माध्यन्दिनीये शतपथब्राह्मणऽउपनिषन्नाम चतुर्दशं काण्ड समाप्तम् ॥१॥